द्वीपमुन्नतमाख्यातं प्राहा चैवेष्टका स्मृता ।
कौलिनं सजलं प्रोक्तं दूरखातोदको मरुः ॥ १५ ॥
द्वारगवाचलक्ष्यैः कर्ह्मभिख्यक्तकोणवेधैश्च ।
नेष्टं वास्तुद्वारं विद्धमनाक्रान्तमार्य्यैश्च ॥ १६ ॥
वग्नक्रमाविति प्रोक्ष्यैर्व्वकुयेति यवांस्तथा ।
असावित्यत्र नामोक्ता जुहुयात् चिप्रहोमवत् ॥१७॥
साचतं सुमनोयुक्तमुदकं दधिसंयुतम् ।
अर्घ्यं दधिमधुभ्याञ्च मधुपर्को विधीयते ॥ १८ ॥
कांस्येनैवार्हणीयस्य निनयेदर्घ्यमञ्जलौ ।
कांस्यापिधानं कांस्यस्थं मधुपर्कं समर्पयेत् ॥१६॥ २८ खण्डः ॥
इति कात्यायनविरचिते कर्म्मप्रदीपे तृतीयः प्रपाठकः ॥
समाप्ता चेयं कात्यायनसंहिता ॥

---

अथ बृहस्पतिस्मृतिः ॥

इष्ट्वा क्रतुशतं राजा समाप्तवरदक्षिणम् ।
मघवान् ! वाग्विदां श्रेष्ठं पर्य्यपृच्छद्बृहस्पतिम् ॥
भगवन् केन दानेन सर्वतः सुखमेधते ।
यद्दत्तं यन्महार्घं च तन्मे ब्रूहि महातप ! ॥
एवमिन्द्रेण पृष्टोऽसौ देवदेवपुरोहितः ।
वाचस्पतिर्महाप्राज्ञो बृहस्पतिरुवाच ह ॥
सुवर्णदानं गोदानं भूमिदानं च वासव ! ।
एतत् प्रयच्छमानस्तु सर्वपापैः प्रमुच्यते ॥
सुवर्णं रजतं वस्त्रं मणिरत्नं च वासव ! ।
सर्वमेव भवेद्दत्तं वसुधां यः प्रयच्छति ॥

फालाकृष्टां मही दत्त्वा सबीजां शस्यशालिनीम्।
यावत् सूर्यकरा लोकास्तावत् स्वर्गे महीयते॥
यत्किञ्चित् कुरुते पापं पुरुषो वृत्तिकर्षितः।
अपि गोचर्ममात्रेण भूमिदानेन शुध्यति॥
दशहस्तेन दण्डेन त्रिंशद्दण्डानि वर्त्तनम्।
दश तान्येव विस्तारो गोचर्म तन्महाफलम्॥
सवृषं गोसहस्रं च यत्र तिष्ठत्यतन्द्रितम्।
बालवत्सप्रसूतानां तद्गोचर्म इति स्मृतम्॥
विप्राय दद्याच्च गुणान्विताय तपोवियुक्ताय जितेन्द्रियाय।
यावन्मही तिष्ठति सागरान्ता तावत् फलं तस्य भवेदनन्तम्॥
यथा बीजानि रोहन्ति प्रकीर्णानि महीतले।
एवं कामाः प्ररोहन्ति भूमिदानसमार्जिताः॥
यथाप्सु पतितः सद्य स्तैलबिन्दुः प्रसर्पति।
एवं भूमिकृतं दानं शस्ये शस्ये प्ररोहति॥
अन्नदाः सुखिनो नित्यं वस्त्रदश्चैव रूपवान्॥
स नरः सर्वदो भूपयो ददाति वसुन्धराम्।
यथा गौर्भरते वत्सं क्षीरमुत्सृज्य क्षीरिणी॥
एवं दत्ता सहस्राक्ष! भूमिर्भरति भूमिदम्।
शङ्खं भद्रासनं छत्रं चरस्थावरवारणाः॥
भूमिदानस्य पुण्यानि फलं स्वर्गः पुरन्दर!।
आदित्यो वरुणो वह्निर्ब्रह्मा सोमो हुताशनः॥
शूलपाणिश्च भगवानभिनन्दति भूमिदम्।
आस्फोटयन्ति पितरः प्रहर्षन्ति पितामहाः॥
भूमिदाता कुले जातः स नस्त्राता भविष्यति।

त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती ॥
तारयन्ति हि दातारं सर्वात्पापादसंशयम् ।
प्रावृता वस्त्रदा यान्ति नग्ना यान्ति त्ववस्त्रदाः ॥
तृप्ता यान्त्यन्नदातारः क्षुधिता यान्त्यनन्नदाः ।
काङ्क्षन्ति पितरः सर्वे नरकाद्भयभीरवः ॥
गयां यो यास्यति पुत्रः स नः त्राता भविष्यति ।
एष्टव्या बहवः पुत्राः यद्येकोऽपि गयां व्रजेत् ॥
यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ।
लोहितो यस्तु वर्णेन पुच्छाग्रे यस्तु पाण्डुरः ॥
श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते ।
नीलः पाण्डुरलाङ्गूलस्तृणमुद्धरते तु यः ॥
षष्टिर्वर्षसहस्राणि पितरस्तेन तर्पिताः ।
यत्र शृङ्गगतम्पङ्कं कूलस्तिष्ठति चोद्धृतम् ॥
पितरस्तस्य गच्छन्ति सोमलोकं महाद्युतिम् ।
पृथोर्यदोर्दिलीपस्य नृगस्य नहुषस्य च ॥
अन्येषाञ्च नरेन्द्राणां पुनरन्या भविष्यति ।
बहुभिर्वसुधा दत्ता राजभिः सगरादिभिः ॥
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ।
यस्तु ब्रह्मघ्नः स्त्रीघ्नो वा यस्तु वै पितृघातकः ॥
गवां शतसहस्राणां हन्ता भवति दुष्कृती ।
स्वदत्तां परदत्तां वा यो हरेच्च वसुन्धराम् ॥
स्वविष्ठायां क्रिमिर्भूत्वा पितृभिः सह पच्यते ।
आक्षेप्ता वानुमन्ता च तमेव नरकं व्रजेत् ॥
भूमिदो भूमिहर्त्ता च नापरं पुण्यपापयोः ।

ऊर्द्ध्वीवोवावतिष्ठेत यावदा भूतसंप्लवम् ॥
अग्नेरपत्यं प्रथमं हिरण्यं भूर्वैष्णवी सूर्य्यसुताश्चगावः ॥
लोकास्त्रयस्तेन भवन्ति दत्ता यः काञ्चनङ्गाञ्च महीञ्च दद्यात्।
षडशीति सहस्राणां यो जनानां वसुन्धराम्।
स्वतो दत्ता तु सर्वत्र सर्वकामप्रदायिनी ॥
भूमिं यः प्रतिगृह्णाति भूमिं यस्य प्रयच्छति।
उभौ तौ पुण्यकर्माणौ नियतं स्वर्गगामिनौ ॥
सर्वेषामेव दानानां एकजन्मानुगं फलम्।
हाटकक्षितिगौरीणां सप्तजन्मानुगं फलम् ॥
योगहिंस्यादहं ह्यात्मा भूतग्रामं चतुर्विधम्।
तस्य देहादियुक्तस्य भयं नास्ति कदाचन ॥
अन्यायेन हृता भूमिर्यै नरैरपराहिता।
हरतो हारयन्तश्च हन्युस्ते सप्तमङ्कुलम् ॥
हरते हरयेद्यस्तु मन्दबुद्धिस्ततो हृतः।
स वध्यो वारुणैः पाशैस्तिर्यग्योनिषु जायते ॥
अश्रुभिः पतितैस्तेषां दानानामपकीर्त्तनम्।
ब्राह्मणस्य हृते क्षेत्रे हतन्त्रिपुरुषं कुलम् ॥
वापीकूपसहस्रेण अश्वमेधशतेन च।
गवां कोटिप्रदानेन भूमिहर्त्ता न शुध्यति ॥
गामेकां स्वर्णमेकं वा भूमेरप्यर्द्धमङ्गुलम्।
हरन्नरकमायाति यावदाभूतसंप्लवम्।
हुतं दत्तं तपोधीतं यत्किञ्चिद्धर्म्मसञ्चितम् ॥
अर्द्धाङ्गुलस्य सीमाया हरणेन प्रणश्यति।
गोवीथीं ग्रामरथ्याञ्च श्मशानं गोपितं तथा ॥

सम्मोह्य नरकं याति यावदाभूतसंप्लवम्।
ऊषरे निर्जले स्थाने प्रस्तं शस्यं विसर्जयेत्॥
जलाधारश्च कर्त्तव्यो व्यासस्य वचनं यथा।
पञ्चकन्यानृते हन्ति दश हन्ति गवानृते॥
शतमश्वानृते हन्ति सहस्रं पुरुषानृते।
हन्ति जाता न जातांश्च हिरण्यार्थे नृतं वदेत्॥
सर्वं भूम्यानृते हन्ति मास्म भूम्यनृतं वदीः।
ब्रह्मस्वे मा रतिं कुर्य्याः प्राणैः कण्ठगतैरपि॥
अनौषधमभेषज्यं विषमेतद्धलाहलम्।
न विषं विषमित्याहुः ब्रह्मस्वं विषमुच्यते॥
विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम्।
लोहचूर्णाश्मचूर्णं च विषञ्च ज्वरयेन्नरम्॥
ब्रह्मस्वं त्रिषु लोकेषु कः पुमान् ज्वरयिष्यति।
मन्युप्रहरणा विप्रा राजानः शस्त्रपाणयः॥
शस्त्रमेकाकिनं हन्ति विप्रमन्युः कुलक्षयम्।
मन्युप्रहरणा विप्रा चक्रप्रहरणो हरिः॥
चक्रात्तीव्रतरो मन्युस्तस्माद्विप्रं न कोपयेत्।
अग्निदग्धाः प्ररोहन्ति सूर्य्यदग्धास्तथैव च॥
मन्युदग्धस्य विप्राणामङ्कुरो न प्ररोहति।
अग्निर्दहति तेजसा सूर्य्यो दहति रश्मिभिः॥
राजा दहति दण्डेन विप्रो दहति मन्युना।
ब्रह्मस्वेन तु यत् सौख्यन्देवस्वेन तु या रतिः॥
तद्धनं कुलनाशाय भवत्यात्मविनाशकम्।
ब्रह्मस्वं ब्रह्महत्या च दरिद्रस्य च यत् धनम्॥

गुरुमित्रहिरण्ये च स्वर्गस्थमपि पीडयेत्।
ब्रह्मस्वेन तु यच्छिद्रं तच्छिद्रं न प्ररोहति॥
प्रच्छादयति तच्छिद्रमन्यत्र तु विसर्पति।
ब्रह्मस्वेन तु पुष्टानि साधनानि बलानि च॥
संग्रामे तानि लीयन्ते सिकतासु यथोदकम्।
श्रोत्रियाय कुलीनाय दरिद्राय च वासव!॥
सन्तुष्टाय विनीताय सर्वभूतहिताय च।
वेदाभ्यासस्तपोज्ञानमिन्द्रियाणां च संयमः॥
ईदृशाय सुरश्रेष्ठ! यद्दत्तं हि तदक्षयम्।
आमपात्रे यथान्यस्तं क्षीरं दधि घृतं मधु॥
विनश्येत्पात्रदौर्बल्यात्तच्च पात्रं विनश्यति।
एवं गाश्च हिरण्यञ्च वस्त्रमन्नं महीं तिलान्॥
अविद्वान् प्रतिगृह्णाति भस्मीभवति काष्ठवत्।
यस्य चैव गृहे मूर्खो दूरे चापि बहुश्रुतः॥
बहुश्रुताय दातव्यं नास्ति मूर्खे व्यतिक्रमः।
कुलं तारयते धीरः सप्त सप्त च वासव!॥
यस्तटाकं नवं कुर्य्यात् पुराणं वापि खानयेत्।
स सर्वं कुलमुद्धृत्य स्वर्गे लोके महीयते॥
वापीकूपतड़ागानि उद्यानोपवनानि च।
पुनः संस्कारकर्त्ता च लभते मौलिकं फलम्॥
निदाघकाले पानीयं यस्य तिष्ठति वासव!।
स दुर्गं विषमं कृत्स्नं न कदाचिदवाप्नुयात्॥
एकाहं तु स्थितं तोयं पृथिव्यां राजसत्तम!।

कुलानि तारयेत्तस्य सप्त सप्त पराण्यपि ॥
दीपालोकप्रदानेन वपुष्मान् स भवेन्नरः ।
प्रेक्षणीयप्रदानेन स्मृतिं मेधाञ्च विन्दति ॥
कृत्वाऽपि पापकर्म्माणि यो दद्यादन्नमर्थिने ।
ब्राह्मणाय विशेषेण न स पापेन लिप्यते ॥
भूमिर्गावस्तथा दाराः प्रसह्य ह्रियते यदा ।
नचावेदयते यस्तु तमाहुर्ब्रह्मघातकम् ॥
निवेदितस्तु राजा वै ब्राह्मणैर्मन्युपीड़ितैः ।
तं न तारयते यस्तु तमाहुर्ब्रह्मघातकम् ॥
उपस्थिते विवाहे च यज्ञे दाने च वासव ! ।
मोहाच्चरति विघ्नं यः स मृतो जायते क्रिमिः ॥
धनं फलति दानेन जीवितं जीवरक्षणात् ।
रूपमैश्वर्य्यमारोग्यमहिंसाफलमश्नुते ॥
फलमूलाशनात् पूज्यं स्वर्गं सत्येन लभ्यते ।
प्रायोपवेशनाद्राज्यं सर्वत्र सुखमश्नुते ॥
गवाढ्यशक्रदीक्षायाः स्वर्गगामी तृणाशनः ।
स्त्रिय स्त्रिषवणस्नायी वायुं पीत्वा क्रतुं लभेत् ॥
नित्यस्नायी भवेदर्कः सन्ध्ये द्वे च जपन् द्विजः ।
न तत्साधयते राजन् नाकपृष्ठमनाशके ॥
अग्निप्रवेशे नियतं ब्रह्मलोके महीयते ।
रसानां प्रतिसंहारे पशून् पुत्रांश्च विन्दति ॥
नाके चिरं स वसते उपवासी च यो भवेत् ।
सततं चैकशायी यः स लभेदीप्सितां गतिम् ॥

वीरासनं वीरशय्यां वीरस्थानमुपाश्रितः।
अक्षय्यास्तस्य लोकाः स्युः सर्वकामगमास्तथा॥
उपवासश्च दीक्षाश्च अभिषेकश्च वासव!।
कृत्वा द्वादशवर्षाणि वीरस्थानाद्विशिष्यते॥
अधीत्य सर्ववेदान् वै सद्यो दुःखात् प्रमुच्यते।
पावनं चरते धर्मं स्वर्गे लोके महीयते॥
वृहस्पतिमतं पुण्यं ये पठन्ति द्विजातयः।
चत्वारि तेषां वर्धन्ते आयुर्विद्या यशो बलम्॥

॥ इति वृहस्पतिप्रणीतं धर्मशास्त्रं सम्पूर्णम्॥